बहिः कथं तु निर्यासि मध्ये गच्छ सिताम्बर ! । अर्पिते गूर्जरे सर्वे सर्वतो मुत्कला भुवम् ॥ २०६ ॥
स च श्रुत्वा करालोक्तिर्विकरालमुखोऽवदत् । मध्ये सिंहासनासीनं भूपालमिव गर्वतः ॥ २०७ ॥
कर्णे धृत्वा प्रमोरग्रे नयतास्माकवैरिणम् । जयपत्रमयाप्नोति यमपत्रमथापि वा ॥ २०८ ॥
तृषाक्रान्ता वयं युष्मत्पुरवासत्यतां गताः । भवद्धर्मेण नीराय गच्छामो मुञ्चत द्रुतम् ॥ २०९ ॥
एकेन चाश्ववारेण कृपया मोचितोऽथ सः । मनीषिमौलिरब्रह्म गृहं प्रापपमीः प्रभुः ॥ २१० ॥ 5
स चाह वाक्पथातीताच्छेकताने यतीश्वरः । यमदृष्टिपथादन्तर्धाय मे दृक्पथे स्थितः ॥ २११ ॥
अद्य ते जन्म मन्येऽहं गच्छसेऽद्य सपुण्यकः[1] । यद्भवानागतो जैनशासनव्योमभास्करः ॥ २१२ ॥
कथमागा इदं पृष्टः सूराचार्यो यथातथम्[2] । अभ्यधादिति[3] च श्रुत्वा परमानन्दमाप्तवान् ॥ २१३ ॥
भूमीगृहे सावकाशेऽयस्थाप्यादरपूर्वकम् । शुद्धाहारेण तं भक्त्या प्रत्यलाभयदुद्यतः ॥ २१४ ॥
ततस्ताम्बूलिकस्तोमं तत्र यान्तं निरीक्ष्य सः । अत्यादरेण संमान्य भोजनाच्छादनादिना ॥ २१५ ॥ 10
ततश्चाभ्यर्थयामास तान् मम भ्रातरं स्वकम् । अणहिल्लपुरं यावत् परानयत निश्चितम् ॥ २१६ ॥
तेऽप्यूचुर्ब्राह्मणः पूज्यो राज्ञां ज्ञातो बुधाग्रणीः । तदादेशः प्रमाणं नः कार्यमावश्यकं ह्यदः ॥ २१७ ॥
नात्रानिर्वृतिराधेया नयामः सपरिच्छदम् । यानारोहे चरे[4] भुक्तौ[5] निश्चिन्तो वर्ततामसौ ॥ २१८ ॥
श्रीमता धनपालेन दीनाराणां शतं ददे । अङ्गीकरणतोऽमीषां रङ्गसङ्गतरङ्गिणा ॥ २१९ ॥
गुरुचोलकमध्ये[6] च गुप्तं कृत्वा गुरुं तदा । पर्याण्य वृषभान् शीघ्रं ते चेलुर्गूर्जरावनौ ॥ २२० ॥ 15
महीतटागतेन श्रीसूराचार्येण सद्गुरोः । विज्ञापितं नरेरात्मागमनं कौशलोत्तरम् ॥ २२१ ॥

§९. इतश्च विविशुश्चैत्यमपराह्णे भटाः स्वयम् । साधुं स्थूलोदरं दृष्ट्वा सिंहासन्युपवेशितम् ॥ २२२ ॥
प्रधानवस्त्रसंवीतमुधन्मद्कलाकृतिम् । एवमूचुर्नृपादेशान्निर्गच्छत जिनालयात् ॥ २२३ ॥–युग्मम् ।
मध्ये योऽत्र विलम्बः सोदूखले पातयत्नना । उत्थाय सोऽमतो भूत्वाऽश्ववारैः सह जग्मिवान् ॥ २२४ ॥
पार्थिवस्य पुरो भूत्वाऽवतस्थे मौनमास्थितः । विलक्षेण ततो राज्ञाऽऽज्ञायका[7] जल्पितास्तदा ॥ २२५ ॥ 20
कोऽयं भवद्भिरानीतो घठरः स्थूलदेहभृत् । "गतोऽसौ गूर्जरश्छेको भवतामग्रतो ननु ॥ २२६ ॥
अक्षिण रेणुं हि निक्षिप्य येनाप्यन्धाः कृताः[8] कथम् । भवतां सदृशः कश्चिच्चेतनारहितो नहि ॥ २२७ ॥
तेऽप्यूचुर्नाथ ! नीरस्य वाहकं दुर्गतं मुनिम् । एकं मुक्त्वा न कस्यापि निर्गमोऽस्मत्पुरः प्रभो ! २२८ ॥
नृप आह पराभूत्य वेषं यः पश्यतां ययौ । विजित्य नः[9] समो नान्यस्तं विनोत्पन्नबुद्धिमान् ॥ २२९ ॥
पुरस्थं प्राह राजा त्वमायासं गच्छ पुण्यतः । भूर्गत्वं हि वरं श्लाघ्यं येनात्समतोऽपि जीवितः ॥ २३० ॥ 25
इत्यसौ प्रहितो राज्ञा मठे व्याघुट्य चाययौ । मूर्ध्न एव क्षुधोर्नैवाशवपर्दन-मुण्डने ॥ २३१ ॥

§१०. इतः श्रीभीमभूपालः प्रजिघाय नरान् निजान् । आह्वापकान् निजभ्रातुर्गीतुस्तो प्रतिभिः[10] सह ॥२३२॥
स्वदेशे प्रकटो भूत्वा राजधानीमथाययुः । गुरवः[11] सद्गर्ववीतामस्याभिमुख्यमागमन ॥ २३३ ॥
राजा च सर्वसामग्र्या प्रतिपन्नीय कः शुभे । आचार्यः स्वगुरोः पादौ प्रेक्ष्य ह्रीमानिवानमत् ॥ २३४ ॥
प्रत्यासमभ्र तेषां स सर्वाभिगमपूर्वकम् । योगीवाप्ताङ्गयोगेन प्रह्वोऽभिदितवान् वचः ॥ २३५ ॥ 30
सपत्नाऽस्त गुरोराज्ञा सफला मातुराशिषः । प्रसन्ना दृक् च मा दृशे श्रीसङ्घस्य फलेग्रहिः ॥ २३६ ॥
अधिगृह्य विघायी च गतो मालवके तदा ।
अज्ञातोऽहनिद्रागच्छं यत्रित्वा भोजपर्षदम् ॥ २३७ ॥–युग्मम् ।

1 N पुण्यकः । 2 N यथा तथा । 3 N अभ्यधादिति । 4 A D N यानारोहे । 5 N भक्तौ । 6 N गुरुचोलक° । 7 N दृष्टिः । 8 N गतौ । 9 N °स्थानकः । 10 D N न मठे । 11 N गुर्विणि । 12 A [illegible], D [illegible] ।

तथाऽन्तेवासिनोऽमी श्रीगुरुपादाम्रतो मम । क्ष(क्षू ?)णं नाकथयिष्यन्नाशिक्षिष्यत न च प्रभुः ॥ २३८ ॥
बालोऽहं[1] यदि दर्पेण न व्यधास्यं प्रतिश्रवम् । गुरुमस्तकहस्तस्य कः प्रमाणमथोच्यते ॥ २३९ ॥–युग्मम् ।
इत्याकर्ण्य प्रभुर्द्रोणः शोणहृद इव स्थिरः । उवाच वाचमाचारचारुचारित्रचक्षुरः ॥ २४० ॥
एवं प्रतिश्रवं क्लीवदुष्करं विदधीत कः । निर्वाह्येत च श्रीमन्! विना त्वामाप्तवाग्वरम्[2] ॥ २४१ ॥
सगच्छ-सङ्घाश्च वयमाचामाम्लैरुपस्थिताः । आभवद्वदनालोकात् सम्यक्शासनदेवताम् ॥ २४२ ॥
सगद्गदगुदित्वैवं स बाढं परिषस्वजे । गुरुभिश्चाथ भूपोऽपि श्रीभीमः प्राह सादरम् ॥ २४३ ॥
मनीषी विनयी छेकस्तत्कालोत्पन्नबुद्धिमान् । त्वां विना दृश्यते नान्यस्तेजस्वी दृढधैर्यभूः[3] ॥ २४४ ॥
श्रीभोजं छलयित्वा यत्ताहक्प्राज्ञपरिग्रहम् । आगत्याक्षतदेहस्त्वं मम तेजोऽभ्यवर्द्धय ॥ २४५ ॥
किञ्चित् पृच्छामि सन्देहं नृपतिः स [4]स्तुतो न वा । सूरसूरिरथ प्राह पयोवाहनिभध्वनिः ॥ २४६ ॥
रसना मे महाराज ! त्वां विना स्तौति नापरम् । मदुक्तस्य च काव्यस्य भावार्थं शृणु कौतुकात् ॥२४७॥
शिला विद्धा सती विद्धा छिद्रे शरमुचां हि कः । विक्रमः कार्मुकक्रीडां मुञ्च तद् व्याजतः कृताम् ॥२४८॥
व्यसने त्वपदां भेदाद् भवतां पूर्वजो गिरिः । अर्बुदस्तस्य भेदे तु ध्वस्ताधारा धरित्र्यपि ॥ २४९ ॥
पातालमूलं यान्तीयं शिक्षयेऽहमिति ब्रुवन् । अपि द्विपति सच्छिक्षा दातव्या शमजीवितैः ॥ २५० ॥
श्रीभीमः प्राह तच्छ्रुत्वा पुलकोद्भेदमेदुरः । मद्बन्धुना जिते भोजे का मे चिन्तास्ति तज्जये ॥ २५१ ॥
स्वसमीपे समारोप्य गजराजवरासने । सूराचार्यस्य भूपालः प्रवेशोत्सवमातनोत् ॥ २५२ ॥

§११. अतीचारान् स विज्ञप्य गुरुपार्श्वे महामतिः । देशान्तरगतो जातांस्तपसाऽशोधयद् दृढम् ॥ २५३ ॥
युगादिनाथ-श्रीनेमिचरित्राद्भुतकीर्तनात् । इतिवृत्तं द्विसन्धानं व्यधात्[5] स कविशेखरः ॥ २५४ ॥
यः पूर्वं पिपठीः शिष्यवर्गस्तमिह सूरिराट् । सम्यग् निष्पाद्य वादीन्द्रतया स समयोऽजयत् ॥ २५५ ॥
श्रीद्रोणसूरिणेङ्गिन्यां[6] परलोके सुसाधिते । क्षितावक्षामचारित्रपवित्रः [7]सूरसद्गुरुः ॥ २५६ ॥
प्रभावनाभिः श्रीसङ्घमुन्नमय्य श्रुतोदधिः । शिष्यान्निष्पाद्य सम्पाद्य जैनप्रवचनोन्नतिम् ॥ २५७ ॥
योग्यं सूरिपदे न्यस्य भारमत्र निवेश्य च । प्रायोपवेशनं पञ्चत्रिंशद्दिनमितं दधौ ॥ २५८ ॥
आत्मारामादरः सम्यग् योगत्रयनिरोधतः[8] ।
श्रीभीमभूपतेर्बन्धुरुत्तमां गतिमाश्रयत् ॥ २५९ ॥–चतुर्भिः कलापकम् ।

श्रीसूराचार्यवृत्तं व्यरचि परिचितं वादविद्याविनोद-
क्षुभ्यद्वादिप्रवादं किमपि गुरुमुखादन्यतो वाथ[9] किञ्चित् ।
श्रेयो देयादमेयं जिनपतिवचनोद्योतनस्थैर्यहेतुः
सेतुर्जाड्याम्बुराशेर्भवतु भवभृतामद्य विद्योद्यमाय ॥ २६० ॥
श्रीचन्द्रप्रभसूरिपट्टसरसीहंसप्रभः श्रीप्रभा-
चन्द्रः सूरिरनेन चेतसि कृते श्रीरामलक्ष्मीभुवा ।
श्रीपूर्वर्षिचरित्ररोहणगिरौ श्रीसूरसूरेः कथा
श्रीप्रद्युम्नमुनीन्दुना विशदितः शृङ्गोऽयमष्टादशः ॥ २६१ ॥

॥ ग्रंथ० २६१, अ० २३ । उभयं ४२७७, अ० २८ ॥

॥ इति श्रीसूराचार्यप्रबन्धः ॥

---

1 N बालोऽयं । 2 A D °मासवान् मरं । 3 N °वीर्यभूः । 4 N सस्तुतो । 5 A विधात् । 6 N द्रोणसूरिणां गत्या । 7 N सूरि° । 8 A D योगत्रितयरोधतः । 9 C N °वाप्य ।

# १९. श्रीअभयदेवसूरिचरितम् ।

श्रीजैनतीर्थधम्मिल्लोऽ**भयदेवः** प्रभुः श्रिये । भूयात् सौमनसोद्भेदभास्वरः सर्वमौलिभूः ॥ १ ॥
आदत्याष्टाङ्गयोगं यः स्वाङ्गमुद्धृत्य च प्रभुः । श्रुतस्य च नवाङ्गानां प्रकाशी स श्रिये द्विधा ॥ २ ॥
वदन् बालो यथाऽव्यक्तं मातापित्रोः प्रमोदकृत् । तद्वृत्तमिह वक्ष्यामि गुरुहर्षकृते यथा ॥ ३ ॥
§१. अस्ति **श्रीमालवो** देशः सद्वृत्तरसशालितः । जंबूद्वीपाख्यमाकन्दफलं सद्वर्णवृत्तसूः ॥ ४ ॥ 5
तत्रास्ति नगरी **धारा** मण्डलाग्रोदितस्थितिः । मूलं नृपश्रियो दुष्टविग्रहद्रोहशालिनी ॥ ५ ॥
श्री**भोजराज**स्तत्रासीद् भूपालः पालितावनिः । शेषस्येवापरे मूर्ती विश्वोद्धाराय यद्भुजौ ॥ ६ ॥
तत्र **लक्ष्मीपति**र्नाम व्यवहारी महाधनः । यस्य श्रिया जितः श्रीदः कैलासाद्रिमशिश्रयत्[1] ॥ ७ ॥
अन्यदा **मध्यदेशीयकृष्ण**ब्राह्मणनन्दनौ । प्रह्वप्रज्ञाबलाक्रान्तवेदविद्याविशारदौ ॥ ८ ॥
अधीतपूर्विणौ सर्वान् विद्यास्थानांश्चतुर्दश । स्मृत्यैतिह्यपुराणानां कुलकेतनतां गतौ ॥ ९ ॥ 10

**श्रीधरः श्रीपति**श्चेति नामानौ यौवनोद्यमात् ।
देशान्तरदिदृक्षायै निर्गतौ तत्र चागतौ ॥ १० ॥–त्रिभिर्विशेषकम् ।

तौ पवित्रयतः स्मात्र **लक्ष्मीधर**गृहाङ्गणम् । सोऽपि भिक्षां ददौ भक्त्या तदाकृतिवशीकृतः ॥ ११ ॥
गेहाभिमुखभित्तौ च लिख्यते स्मास्य लेखकम् । टंकविंशतिलक्षाणां नित्यं ददृशतुश्च तौ ॥ १२ ॥
सदा दर्शनतः प्रज्ञाबलादप्यतिसङ्कुलम् । तत्परिस्फुरितं सम्यक् सदाभ्यस्तमिवानयोः ॥ १३ ॥ 15
जनो मत्पार्श्वतः सूपकारवत्सूपकारवान् । वर्तते निष्ठुरः किं तु मम किञ्चिन्न यच्छति ॥ १४ ॥
ब्राह्मणा अपि गीर्वाणान् मन्मुखादाहुतिप्रदाः । तर्पयन्तु फलं तु स्यात् तत्कर्मकरतैव मे ॥ १५ ॥
इतीव कुपितो वह्निरह्नैकेनापि भस्मसात् । विदधे तां पुरीमूरीकृतप्रतिकृतक्रियः ॥ १६ ॥–त्रिभिर्विशेषकम् ।
**लक्ष्मीपति**र्द्वितीयेऽह्नि न्यस्तहस्तः कपोलयोः । सर्वस्वनाशतः खिन्नो लेख्यदाहाद् विशेषतः ॥ १७ ॥
प्राप्ते काले गतौ भिक्षाकृते तस्य गृहाङ्गणे । प्राप्तौ दुष्टं च तद्दृष्ट्वा विषण्णाविदमूचतुः ॥ १८ ॥ 20
यजमान ! तवोन्निद्रकष्टेनावां सुदुःखितौ । किं कुर्वहे क्षुधा किं तु सर्वदुःखातिशायिनी ॥ १९ ॥
पुनरीदृक्शुचाक्रान्तसत्त्ववृत्तिर्भवान् किमु । धीराः सत्त्वं न मुञ्चन्ति व्यसनेषु[2] भवादृशाः ॥ २० ॥
इत्याकर्ण्य तयोर्वाक्यमाह श्रेष्ठी निशम्यताम् । न मे धनान्नवस्त्रादिदाहाद् दुःखं हि तादृशम् ॥ २१ ॥
यादृग्लेख्यकनाशेन[3] निर्धर्मेण जनेन यत् । कलहः संभवी धर्महानिकृत् क्रियते हि किम् ॥२२॥–युग्मम् ।
जजल्पतुश्च तावावां भिक्षावृत्ती [4]तवापरम् । शक्नुवो नोपकर्तुं हि व्याख्यावो लेख्यकं[5] पुनः ॥ २३ ॥ 25
श्रुत्वातिहर्षभूः श्रेष्ठी स्वपुरस्तौ वरासने । न्यवेशयज्जनः स्वार्थपूरकं ध्रुवमर्हति ॥ २४ ॥
तौ चादितः समारभ्य तिथिवारर्क्षसङ्गतम् । व्यक्तवत्सरमासाङ्कसहितं खदिनीदलैः ॥ २५ ॥
वर्णजात्यभिधामूलद्रव्यसंख्यानवृद्धिभृत् । आख्यातं लेख्यकं स्वाख्याख्यानवह्निपणानलात् ॥ २६ ॥
पत्रकेषु लिखित्वा तत् श्रेष्ठी दध्याविहो इमौ । मम गोत्रसुरौ कौचित् प्राप्तौ मदनुकम्पया ॥ २७ ॥
यद्विशोपकमात्रेण वदन्तौ तावविस्मृतम् । दस्तरी-संपुटी[6]-पत्रनिरपेक्षं हि लेख्यकम् ॥ २८ ॥–युग्मम् । 30
ततः सन्मान्य सद्भोज्य वस्त्राद्यैर्बहुमानतः । स्वगेहचिन्तकौ तेन विहितौ हितवेदिना ॥ २९ ॥
जितेन्द्रियौ स तौ शान्तौ दृष्ट्वेति व्यमृशद् धनी । शिष्यौ सद्गुरुपार्श्वेऽमू स्तां चेत् तत्संघभूषणौ ॥ ३० ॥

1 A D °शिश्रियत् । 2 N व्यसनेन । 3 N °लेखक° । 4 N तवापरं । 5 N दुस्तरीसंपुटे । 6 B °पित्रपे ।

§२. इतः सपादलक्षेऽस्ति नाम्ना कूर्चपुरं पुरम् । मषीकूर्चकमाधातुं यदलं शात्रवानने ॥ ३१ ॥
अल्लुभूपालपौत्रोऽस्ति[1] प्राक्पौत्रीव[2] धराधरः ।
श्रीमान् भुवनपालाख्यो विख्यातः सान्वयाभिधः ॥ ३२ ॥
तत्रासीत् प्रशमश्रीभिर्वर्द्धमानगुणोदधिः । श्रीवर्द्धमान इत्याख्यः सूरिः संसारपारभूः ॥ ३३ ॥
5 चतुर्भिरधिकाशीतिश्चैत्यानां येन तत्यजे । सिद्धान्ताभ्यासतः सत्यतत्त्वं विज्ञाय संसृतेः ॥ ३४ ॥
अन्यदा विहरन् धारापुर्यां धाराधरोपमः । आगाद् वाग्ब्रह्मधाराभिर्जनमुक्तीवयन्नयम् ॥ ३५ ॥
लक्ष्मीपतिस्तदाकर्ण्य श्रद्धालक्ष्मीपवित्रितः । ययौ प्रद्युम्न-शाम्बाभ्यामिव ताभ्यां गुरोर्नवौ ॥ ३६ ॥
सर्वाभिगमपूर्वं स प्रणम्योपाविशत् प्रभुम् । तौ विधाय निविष्टौ च करसम्पुटयोजनम् ॥ ३७ ॥
वर्यलक्षणवर्यां च दध्यौ वीक्ष्य तनुं तयोः । गुरुराहानयोर्मूर्त्तिः सम्यक् स्वपरजित्वरी ॥ ३८ ॥
10 तौ च प्राग्भवसम्बद्धाविवानिमिषलोचनौ । वीक्षमाणौ गुरोरास्यं व्रतयोग्यौ च तैर्मतौ ॥ ३९ ॥
देशनामीशुभिर्ध्वस्ततामसौ बोधरङ्गिणौ । लक्ष्मीपत्यनुमत्या च दीक्षितौ शिक्षितौ तथा* ॥ ४० ॥
महाव्रतभरोद्धारधुरीणौ[3] तपसां निधी । अध्यापितौ च सिद्धान्तं योगोद्वहनपूर्वकम् ॥ ४१ ॥
ज्ञात्वौचित्यं च सूरित्वे स्थापितौ गुरुभिश्च तौ । [4]शुद्धवासो हि सौरभ्यवासं समनुगच्छति ॥ ४२ ॥
जिनेश्वरस्ततः सूरिरपरो बुद्धिसागरः । नामभ्यां विश्रुतौ पूज्यैर्विहारेऽनुमतौ तदा ॥ ४३ ॥
15 ददे शिक्षेति तैः श्रीमत्पत्तने [5]चैत्यसूरिभिः । विघ्नं सुविहितानां स्यात् तत्रावस्थानवारणात् ॥ ४४ ॥
युवाभ्यामपनेतव्यं शक्त्या बुद्ध्या च तत् किल । यदिदानीतने काले नास्ति प्राज्ञो भवत्समः ॥४५॥–युग्मम् ।
अनुशास्तिं प्रतीच्छाय इत्युक्त्वा गूर्जरावनौ । विहरन्तौ शनैः श्रीमत्पत्तनं प्रापतुर्मुदा ॥ ४६ ॥
सद्गीतार्थपरीवारौ तत्र भ्रान्तौ गृहे गृहे । विशुद्धोपाश्रयालाभाद् वाचा सस्मरतुर्गुरोः ॥ ४७ ॥
श्रीमान् दुर्लभराजाख्यस्तत्र चासीद् विशांपतिः । गीष्पतेरप्युपाध्यायो नीतिविक्रमशिक्षणे[6] ॥ ४८ ॥
20 श्रीसोमेश्वरदेवाख्यस्तत्र चासीत् पुरोहितः । तद्गेहे जग्मतुर्युग्मरूपौ सूर्यसुताविव ॥ ४९ ॥
तद्द्वारे चक्रतुर्वेदोच्चारं सङ्केतसंयुतम् । तीर्थं सत्यापयन्तौ च ब्राह्मं पित्र्यं च दैवतम् ॥ ५० ॥
चतुर्वेदीरहस्यानि सारणीशुद्धिपूर्वकम् । व्याकुर्वन्तौ स शुश्राव देवतावसरे ततः ॥ ५१ ॥
तद्ध्यानध्याननिर्मग्नचेताः स्तम्भितवत् तदा । समग्रेन्द्रियचैतन्यं श्रुत्योरेव[7] स नीतवान् ॥ ५२ ॥
ततो भक्त्या निजं बन्धुमाप्याय्य वचनामृतैः । आह्वानाय तयोः प्रैषीत् प्रेक्षापेक्षी द्विजेश्वरः ॥ ५३ ॥
25 तौ च दृष्ट्वान्तरायातौ दध्यावम्भोजभूः किमु । द्विधा भूयाद आदत्त दर्शनं शस्तदर्शनम् ॥ ५४ ॥
हित्वा भद्रासनादीनि तद्दत्तान्यासनानि तौ । समुपाविशतां शुद्धस्वकम्बलनिपद्ययोः ॥ ५५ ॥
वेदोपनिषदां जैनतत्त्वश्रुतगिरां तथा । वाग्भिः साम्यं प्रकाश्यैतावभ्यधत्तां तदाशिषम् ॥ ५६ ॥
तथा हि–

अपाणिपादो ह्यमनो ग्रहीता पश्यत्यचक्षुः स शृणोत्यकर्णः ।
30 स वेत्ति विश्वं नहि तस्यास्ति वेत्ता शिवो ह्यरूपी[8] स जिनोऽवताद् वः ॥५७॥

ऊचतुश्चानयोः सम्यग्वगम्यार्थसद्ग्रहम् । दययाभ्यधिकं जैनं तत्रावामाद्रियावहि ॥ ५८ ॥
युवामवस्थितौ कुत्रेत्युक्ते तेनोचतुश्च तौ । न कुत्रापि स्थितिश्चैत्यवासिभ्यो लभ्यते यतः ॥ ५९ ॥

1 N पुत्रोऽपि, 'वंश्यो' इति D टिप्पनी । 2 N प्राक्पौत्रीव । * इदं पद्यं नोपलभ्यते N पुस्तके । 3 N सूरित्वे तरणी । 4 N विद्वासो । 5 N तत्रैचैत्य° । 6 N विशुणाद । 7 D श्रुत्यानेव । 8 N ह्यरूपः ।

द्रम्मलक्षत्रयं कोशाध्यक्षाद् दापयति स सः । पुस्तकान् लेखयित्वा च सूरिभ्यो ददिरेऽथ तैः ॥ १२५ ॥
**पत्तने ताम्रलिप्त्यां** चा**शापल्यां धवलक्के** । चतुराश्चतुरशीतिः श्रीमन्तः श्रावकास्तथा ॥१२६॥
पुस्तकान्यङ्गवृत्तीनां वासनाविशदाशयाः । प्रत्येकं लेखयित्वा ते सूरीणां प्रददुर्मुदा ॥ १२७ ॥–युग्मम् ।
प्रावर्त्तन्त नवाङ्गानामेवं तत्कृतवृत्तयः । श्री**सुधर्मो**पदिष्टेष्टतत्त्वतालककुञ्चिकाः ॥ १२८ ॥

§४. पुरं **धवलकं** प्रापुरथ संयमयात्रया । स्थानेष्वप्रतिबन्धो हि सिद्धान्तोपासितिलक्षणम् ॥ १२९ ॥ 5
आचामाम्लतपःकष्टान्निशायामतिजागरात् । अत्यायासात् प्रभोरङ्गे रक्तदोषो दुरायतिः ॥ १३० ॥
अमर्षन्त[1]जनास्तत्र प्रोचुरुत्सूत्र[2]देशनात् । वृत्तिकारस्य कुष्ठोऽभूत् कुपितैः शासनामरैः ॥ १३१ ॥
निशम्येति शुचाक्रान्तः स्वान्तः[3]प्रायाभिलाषुकः । निशि प्रणिदधे पन्नगेन्द्रं श्रीधरणाभिधम् ॥ १३२ ॥
लेलिहानेश्वरं लेलिहानं देहमनेहसा । अचिरेणैक्षत श्रीमान् स्वप्ने सत्त्वकपोपलः ॥ १३३ ॥
कालरूपेण कालेन व्यालेनालीढविग्रहः । क्षीणायुरिति संन्यास एव मे साम्प्रतं ततः ॥ १३४ ॥ 10
इति ध्यायन् द्वितीयाह्नो[4] निशि स्वप्ने स औच्यत ।
धरणेन्द्रेण रोगोऽयं मयाऽऽलिह्य हृतस्ततः ॥ १३५ ॥–युग्मम् ।
निशम्येति गुरुः प्राह नार्तिर्मे मृत्युभीतितः । रोगाद्वा पिशुना यत्तु[5] कद्वदा तद्धि दुःसहम् ॥ १३६ ॥
नागः प्राहाधृतिर्नात्र कार्या जैनप्रभावनाम् । एकामथ विधेहि त्वं हित्वा दैन्यं जिनोद्धृतेः ॥ १३७ ॥
श्री**कान्तीनगरी**सत्क**धनेश**श्रावकेण यत् । वारिधेरन्तरा यानपात्रेण[6]व्रजता सदा ॥ १३८ ॥ 15
तदधिष्ठायकसुरस्तम्भिते वहने ततः । अर्चितव्यन्तरस्योपदेशेन व्यवहारिणा[6] ॥ १३९ ॥
तस्या भुवः समाकृष्टा प्रतिमाणां त्रयी क्षितिः[7] । तेषामेका च **चारूपग्रामे** तीर्थं प्रतिष्ठितम् ॥ १४० ॥
अन्या श्री**पत्तने** चिञ्चातरोर्मूले निवेशिता । अरिष्टनेमिप्रतिमा प्रासादान्तःप्रतिष्ठिता ॥ १४१ ॥
तृतीया **स्तम्भनग्रामे सेढिका**तटिनीतटे । तरुजाल्यन्तरे भूमिमध्ये विनिहिताऽस्ति च ॥ १४२ ॥
तां श्रीमत्पार्श्वनाथस्यप्रतिमां प्रतिमामिह । 20
प्रकटीकुरु यन्नैतन्महातीर्थं भविष्यति ॥ १४३ ॥–पञ्चिः कुलकम् ।
पुरा **नागार्जुनो** विद्यारससिद्धो धियां निधिः । रसमस्तम्भयद् भूम्यन्तःस्वबिम्बप्रभावतः ॥ १४४ ॥
ततः **स्तम्भनका**भिख्यस्तेन ग्रामो निवेशितः ।
तदेषा तेऽपि कीर्तिः स्याच्छाश्वती पुण्यभूषणा ॥ १४५ ॥–युग्मम् ।
अदृष्टान्यैः पुरी वृद्धारूपा ते[8] मार्गदर्शिका । श्वेत(श्वान ?)स्वरूपतः[9] क्षेत्रपालो गन्ता[10] यथाग्रतः ॥ १४६ ॥ 25
उक्त्वेत्यन्तर्हिते तत्र सूरयः प्रमदोद्धुराः । व्याकुर्वन्ति स्म सङ्घस्य निशावृत्तं तदद्भुतम् ॥ १४७ ॥
ततश्च संमदोत्तालैः प्रक्रान्ता धार्मिकैस्तदा । यात्रा नवशती तत्र शकटानां चचाल च ॥ १४८ ॥
अग्रे भूत्वा प्रगुर्वृद्धा-कौलेयकपदानुगः । श्रावकानुगतो[11]ऽचालीत् तृणकण्टकिना पथा[12] ॥ १४९ ॥
शनैस्तत्र ययुः **सेढीतीरे** तत्र तिरोहितौ । वृद्धा-श्वानौ ततस्तत्रस्थुस्तत्राभिज्ञानतोऽमुतः ॥ १५० ॥
पप्रच्छुरमे गोपालान् पूज्यं किमपि भो ! किमु । जाल्यामत्रास्ति तेष्वेकः प्रोवाच श्रूयतां प्रभो ! ॥ १५१ ॥ 30
ग्रामे **महीणला**ख्यस्य मुख्यपट्टकिलस्य गौः । कृष्णाऽऽगत्य क्षरेत् क्षीरमत्र सर्वैरपि स्तनैः ॥ १५२ ॥
गृहे रिक्तैव सा गच्छेद् दुह्यमानाऽतिकष्टतः । मनाग्मुञ्चति दुग्धं न ज्ञायतेऽत्र न कारणम् ॥ १५३ ॥
तत्र वैर्दर्शितं क्षीरमुपविश्यास्य सन्निधौ । श्रीमत्पार्श्वप्रभोः स्तोत्रं प्रोचे प्राकृतवस्तुकैः ॥ १५४ ॥

---

1 N समर्षयजना° । 2 N प्रोचुरुच्छन्न° । 3 N प्रेयाभि° । 4 N द्वितीयेऽह्नि । 5 N यंत्र । 6 N °हारिणो । 7 N त्रयी-क्षितुः । 8 N पुरिवृद्धारूपावे । 9 N °स्वरूपतस्त्व । 10 N D °पालो यथाग्रतः । 11 N °गुगतो । 12 N यथा ।

'जयतिहुयण'इत्यादि नूत्नं द्वात्रिंशतं तदा । अवदन् स्तवनं तत्र नासाग्रन्यस्तदृष्टयः ॥ १५५ ॥
प्रभूत प्रकटं श्रीमत्पार्श्वनाथप्रभोस्ततः । शनैःश्लिष्टद्वितेजांसि बिम्बं तत्प्रतिपत्तिकम् ॥ १५६ ॥
प्रणतं सूरिभिः सङ्घसहितैरेवदृक्षसा । गतो रोगः समग्रोऽपि कायोऽभूत् कनकप्रभः ॥ १५७ ॥
गन्धाम्भोभिः स संस्नाप्य कर्पूरादिविलेपनैः । विलिप्य चार्चितः सौमनसैः सौमनसैस्तदा ॥ १५८ ॥
5 धन्यो वस्त्रोपरि च्छाया सच्छायाभविसीरया । सत्तादयारिवान् तत्र सङ्घो भाग्यानभोजयत् ॥ १५९ ॥
प्रासादार्थं ततश्चक्रुः माद्धाद् द्रव्यस्य मीलनम् । अर्हच्छेनानिबद्धश्च भाग्यैरनुमता च भूः ॥ १६० ॥
श्रीमल्लवादिशिष्यश्च' धार्मिकाम्रेश्वराभिधः । महिपालस्य'पुराचासः समाज्ञापि धियां निधिः ॥१६१॥
अनुयुक्तः स 'संमान्य कर्मान्तरविचक्षणः । अथ प्रासाद आरेभे' सोऽचिरात् पर्यपूर्यत ॥ १६२ ॥
कर्माध्यक्षस्य पूर्णो यद्भक्त एको दिनं प्रति । विहितो पूतकर्पस्य शुद्धो चण्डुलमानकम् ॥ १६३ ॥
10 विहन्त भोजनात् तेन तेन द्रव्येण चारिता । स्या देवकुलिका चैत्ये सा तत्राऽद्यापि दृश्यते ॥ १६४ ॥
शुभे मुहूर्ते बिम्बं च पूज्यास्तत्र न्यवेशयन् । तत्रासौ धरणाधीशस्तेपामेवदुपारिशत् ॥ १६५ ॥
स्तवनादमुतो गोप्यं मद्गाथा यशुक्तद्वयम् । क्रियतां हि विपुण्यानां प्रत्यक्षीभूयते मया ॥ १६६ ॥
तदादेशादतोऽस्यापि त्रिंशद्वृत्तमिता स्तुतिः । सपुण्यैः पठ्यमानाऽत्र क्षुद्रोपद्रवनाशिनी ॥ १६७ ॥
ततःप्रभृत्यदश्चीर्यं मनोवाञ्छितपूरणम् । प्रवृत्तं रोगशोकादिदुःखदावघनाघनः ॥ १६८ ॥
15 अद्यापि कलशो जन्मकल्याणकमहामहे । धार्यो धवलकश्राद्धः स च स्नपयति प्रभुम् ॥ १६९ ॥
बिम्बागमस्य चामात्यभागेऽस्तुरपरंपरा । चैतिहात् श्रूयते पूर्वकथितात् प्रथिता जने' ॥ १७० ॥
नवेशीपंचवर्षीये वर्षे द्विकचतुष्टये (२२२२) । आषाढः श्रावको गौडोऽकारयत् प्रतिमात्रयम् ॥१७१॥
श्रीमान् जिनेश्वरः सूरिस्तथा श्रीबुद्धिसागरः । चिरमायुः प्रपाल्यैतौ संन्यासाद् दिवमीयतुः ॥१७२॥
श्रीमानभयदेवोऽपि शासनस्य प्रभावना[म्] । पत्तने श्रीकर्णराज्ये धरणोपाश्रितोभितः ॥१७३॥
20 विधाय योगनिरोधविधिनापरचासनः । धर्ं लोकमलंचके धर्मध्यानैकधीनिधिः ॥ १७४ ॥–युग्मम् ।

वृत्तान्तोऽभयदेवसूरिसुगुरोरीदृक् सतामर्चितः
कल्याणैकनिकेतनं कलिकलाशैलाग्रवज्रप्रभः' ।
भूयाद् दुर्धरदुर्घटोद्धितलतमःप्रध्वंसधूर्णोदयः
श्रेयःश्रीनिलयो लयं विदधातु यो प्राणपनन्तोदये ॥ १७५ ॥
25 श्रीचन्द्रप्रभसूरिपट्टसरसीहंसप्रभः श्रीप्रभा-
चन्द्रः सूरिरनेन चेतसि कृते श्रीराम लक्ष्मीभुवा ।
श्रीपूर्णर्षिचरित्ररोहणगिरौ प्रद्युम्नसूरीक्षितो
वृत्तान्तोऽभयदेवसूरिसुगुरोः शृङ्गो महेन्दुप्रभः ॥ १७६ ॥

चरणकमलचञ्चुजीवचञ्चत्तिलकनालीकरूपविजयचक्र ।
30 श्रीप्रद्युम्नसुजाने सुमनभिन्नं नयकुलश्रीः ॥ १७७ ॥

॥ इति श्रीअभयदेवसूरिप्रबन्धः ॥

॥ ग्रंथाग्र १८२, अ० ४ । उभयं ४८६९ ॥

1 N [illegible] । 2 N [illegible] । 3 N [illegible] । 4 N [illegible] । 5 N B A [illegible], A [illegible] [illegible], N [illegible] । 6 N [illegible] ।

## २०. श्रीवीराचार्यचरितम् ।

§१. **वीराचार्यः** श्रिये [1]वोऽस्तु सन्तः क्रोधायरिक्षयम् ।
यदभ्यासे कृताभ्यासाः[2] कर्तुमिच्छन्ति साम्प्रतम् ॥ १ ॥

यत्करस्पर्शमात्रेण कन्यादिष्वपि संक्रमम् । विधाय भारती वक्ति कथं **वीरः** स वर्ण्यते ॥ २ ॥
बहुश्रुतमुखाच्छ्रुत्वा तद्वृत्तं कियदप्यहम् । वर्णयिष्यामि बालः किं न वक्ति स्वानुमानतः ॥ ३ ॥ 5
श्रीमच्चन्द्रमहागच्छसागरे रत्नशैलवत् । अवान्तराख्यया गच्छः **पंडिल्ल** इति विश्रुतः ॥ ४ ॥
श्री**भावदेव** इत्यासीत् सूरिरत्र च रत्नवत् । पात्रे स्नेहादिहीनोऽपि सदा लोकहिते रतः ॥ ५ ॥
श्रीमद्**विजयसिंहाख्याः** सूरयस्तत्पदेऽभवन् । प्रतिवादिद्विपघटाकटपाटनलम्पटाः ॥ ६ ॥
तत्पट्टमानससरोहंसाः श्री**वीरसूरयः** । बभूवुर्गति-शब्दाभ्यामनन्यसदृशश्रियः ॥ ७ ॥
राजा श्री**सिद्धराज**स्तान् मित्रत्वे स्थापयन् गुणैः । स्वभावविशदे होप ददाति कुमुदे मुदम् ॥ ८ ॥ 10
अथ मित्रं समासीनो[3] नृपतिर्नर्मणाऽवदत् । श्री**वीराचार्य**मुनीन्द्रं तेजो वः क्षितिपाश्रयात् ॥ ९ ॥
अथाहुः सूरयः स्वीयप्रज्ञाभाग्यैर्विजृम्भते । प्रतिष्ठा नान्यतः श्वा किं सिंहौजस्वी नृपादृतः ॥ १० ॥
राजाह मत्सभां मुक्त्वा [4]भवन्तोऽपि विदेशगाः । अनाथा इव भिक्षाका बाह्यभिक्षाभुजो ननु ॥ ११ ॥
सूरिराह भवत्प्रेम सन्दानमिव नोऽभवत् । दिनानीयन्ति गच्छाम आपृष्टः साम्प्रतं भवान् ॥ १२ ॥
भूपः प्राह न दास्यामि गन्तुं निजपुरात् तु[5] वः । सूरिराह निषिध्यामो यान्तः[6] केन वयं ननु ॥ १३ ॥ 15
इत्युक्त्वा स्वाश्रयं प्रायात् सूरिर्भूरिकलानिधिः । रुरोध नगरद्वारः सर्वान्[7] नृपतिर्नरैः ॥ १४ ॥
इतश्च गुरवः सान्ध्यं[8] धर्मकृत्यं विधाय ते । विधिवद् विदधुर्ध्यानं श्रीपर्णीपट्टकासनाः[9] ॥ १५ ॥
अध्यात्मयोगतः प्राणनिरोधाद् गगनाध्वना । विद्याबलाच्च ते प्रापुः पुरीं **पल्ली**तिसञ्ज्ञया ॥ १६ ॥
प्रातर्विलोकिते तत्रादृष्टे राजा [10]व्यचिन्तयत् । किं मित्रं गत एवायं सदा शिथिलमोहधीः ॥ १७ ॥
ईदृक् पुनः कथं प्राप्योऽनेकसिद्धिकुलावनिः । सिद्धस्नेहे वयं मन्दपुण्याः पिण्याकसंनिभाः ॥ १८ ॥ 20
इतश्च ब्राह्मणैः **पल्लीवासैः** श्री**पत्तने** पुरे । विज्ञाप्यततरां श्रीमज्ज**यसिंहनरे**शितुः ॥ १९ ॥
तिथि-नक्षत्र-वाराभासरव्यक्तियुते दिने । श्री**वीरसूरि**रायातः संगतो न इति स्फुटम् ॥ २० ॥
श्रुत्वेति विममर्शाथ भूपालः केलिरीदृशी । विकृता यत्स एवैष प्रेमोहापोहवासरः ॥ २१ ॥
ययावाकाशमार्गेण तद्रात्रावेव स ध्रुवम् । नर्मलीलाद्वितीयेऽह्नि तद्द्विजानां स संगतः ॥ २२ ॥–युग्मम् ।
उत्कण्ठा[11]रसपूर्णोऽथ प्रधानान् प्राहिणोन्नृपः । आह्वानाय महाभक्त्या ययुस्ते तत्र मंक्षु च ॥ २३ ॥ 25
नृपस्यानुनयः सान्द्रीकृत्य तैश्च प्रकाशितः । औदासीन्यस्थितास्ते च प्रोचुः प्रचुरसंयमाः ॥ २४ ॥
*निजं विद्याबलं ज्ञातुं वयं हि विजिहीर्षवः । देशान्तरं पुराण्यात्मस्थानस्थैर्ज्ञायते न तत् ॥ २५ ॥
कारणं सहकार्यत्र राज्ञ उच्चावचं वचः । तस्माद् विहृत्य देशेषु यतेष्यामो भवत्पुरे ॥ २६ ॥
दुर्लभं मानुषं जन्म व्रतं विद्या बलं श्रुतम् । मुधा नराधिपस्नेहे मोहैः को नाम हारयेत् ॥ २७ ॥
इत्याकर्ण्याथ ते प्रोचुरेकं शृणुत भूपतेः । वचःसिद्धत्वमस्माकं त्वत्संगात् तथ्यतास्पदम् ॥ २८ ॥ 30
भविष्यति पुनः कालमियन्तं पितृनाम तत् । सिद्धे भवति पार्श्वस्थे वयं सिद्धा हि नान्यथा ॥ २९ ॥

---

1 N-सोऽस्तु । 2 A कृताभ्यास. कर्तुमिच्छति, D कृताभ्यासा. । 3 N समासीनो । 4 N भवतो । 5 N °पुराय । 6 N यातः । 7 N सर्वत्र नृपतेर्नरैः । 8 N सार्ध्वं । 9 N श्रीपट्टपट्टिका° । 10 N व्यचिंतयत् । 11 N उत्कंठारय° । * एष श्लोको नास्ति N पुस्तके ।

श्रुत्वेति बहुमानाद्रेरिव तैराददे वचः । आयास्यते पुरे तत्र मा चिन्ताऽत्र विधीयताम् ॥ ३० ॥
**महाबोधपुरे** बौद्धान् वादे जित्वा बहूनथ[1] । **गोपालगिरि**मागच्छन् राज्ञा तत्रापि पूजिताः ॥ ३१ ॥
परप्रवादिनस्तैश्च जितास्तेषां च भूपतिः । छत्र-चामरयुग्मादिराजचिह्नान्यदान्मुदा ॥ ३२ ॥
व्यावृत्याथ[2] निजां भूमिमायान्तस्तेऽवतस्थिरे । पुरे **नागपुरे** तत्राप्यकार्षुश्च प्रभावनाः ॥ ३३ ॥
ज्ञात्वाथ **सिद्धराजे**नाहूता भक्तिभृताऽथ ते । प्रैषुः परिच्छदं **गोपगिरि**राजसमर्पितम् ॥ ३४ ॥
विजह्रुः सूरयस्तस्माच्छनैः संयममात्रया । **अणहिल्लपुरा**सन्नं **चारूपग्राम**मागमन् ॥ ३५ ॥
अभ्युद्ययावथ श्रीमज्ज**यसिंहनरेश्वरः** । प्रवेशोत्सवमाधत्तादृष्टपूर्वं सुरैरपि ॥ ३६ ॥

§२. अथात्र **वादिसिंहा**ख्यः सांख्यवादी समागमत् ।
पत्रं[3] प्रदत्तवानीदृक्लिखित[4]श्लोकदुर्घटम् ॥ ३७ ॥

तथा हि—

**उद्धृत्य बाहू किल राटीति यस्यास्ति शक्तिः स च वावदीतु ।**
**मयि स्थिते वादिनि वादिसिंहे नैवाक्षरं वेत्ति महेश्वरोऽपि ॥ ३८ ॥**

श्रीमत्**कर्णमहाराज**बालमित्रं यतीश्वरः । **गोविन्दाचार्य** इत्यस्ति **वीराचार्य**कलागुरुः ॥ ३९ ॥
राज्ञो रहः समागत्य छन्नवेषः क्षमाधिपः । प्राह तं किमयं भिक्षुरपि पूज्यैः प्रतीक्ष्यते ॥ ४० ॥
तैः प्रोचे भवतामेव वाग् विलोक्याऽत्र भूपते ! । प्रभाते विवदिष्यन्तं **वीराचार्यो** विजेष्यते ॥ ४१ ॥
प्रीतो राजा प्रभाते तमाह्वास्त नृपपर्षदि । स निःस्पृहत्वदम्भेन शान्तोऽवददिदं तदा ॥ ४२ ॥
वयं किमागमिष्यामो निःसंगा यदि भूपतिः । असद्वाक्कौतुकी भून्यासनोऽत्रायातु सोऽपि तत् ॥ ४३ ॥
प्रातः कुतूहली राजोररीकृत्य तदप्यथ । तदावासे समागच्छदुर्व्यामुर्व्यामुपाविशत् ॥ ४४ ॥
समाह्वयत **गोविन्दसूरिं** सूरिसभासदम् । सोऽपरान् साकृतीनीपद् विदुषोऽपि पुरो दधे ॥ ४५ ॥
**वीराचार्यं** महाप्रज्ञाप्रज्ञातानेकशास्त्रकम् । उग्रदकवित्व[5]वक्तृत्वावधिं पश्चाच्चकार च ॥ ४६ ॥
समाययौ ततस्तत्रोपविष्टः कम्बलासने । राजाह को वदेदेषाममुना वादिना सह ॥ ४७ ॥
श्री**गोविन्द**प्रभुः स्माहानौचित्यज्वरसंगिना । अनेन शास्त्रपाथोधितरण्डोपमधीजुषः ॥ ४८ ॥
अह्नेन सह लज्जन्ते वदन्वस्तत् शिशुः कृती । **वीरो** वदिष्यति प्राज्ञः श्रुत्वा वादी स चावदत् ॥ ४९ ॥
दुग्धगन्धमुखो मुग्धः किं वक्ष्यति मया सह । असमानो विग्रहोऽयं नास्माकं भासते शुभः ॥ ५० ॥
राज्ञोचे क्षीरकण्ठास्वादर्थपीयूषगन्धितः । अस्मात् त्वन्मदधत्तूरविभ्रमः स हरिष्यति ॥ ५१ ॥
श्रुत्वेति स उपन्यासमवज्ञावशतो दधे । अर्धकूर्पर[6]हस्तस्थमस्तकस्तर्कसंभवम् ॥ ५२ ॥
विरते तत्र चाजल्पत् श्री**वीरो** विदुषां प्रभुः । वदामि गद्यात् पद्याद् वा यच्चित्ते तव भासते ॥ ५३ ॥
स्वेच्छं तदुद्दिश छन्दोऽलंकार च ममामतः । सर्वानुवादमर्थानुवादं वा सत्वरं भवान् ॥ ५४ ॥
श्रुत्वेति स पुनः प्राह **गूर्जरा**डम्बरः पुरः । मम न[7] क्रियते बालः किं ज्ञास्यति[8] भवानिह ॥ ५५ ॥
अथ शक्तिस्तवास्ते चेत् पद्येन छन्दसा पुनः । वद मत्तमयूरेणालंकाराभिह्नवात् तथा ॥ ५६ ॥
सर्वानुवादमाश्रित्य स निशम्येति त जगौ । उत्तिष्ठासनसस्थोऽस्याः सावधानस्तवः शृणु ॥ ५७ ॥
वयं नहि गिरा देव्या अवहेलां विदध्महे । अर्द्धसुमपुरो वादाद् आकर्ण्येति स चोत्थितः ॥ ५८ ॥
पाचि धीरं ततो वीर यथा प्रागुक्तसंश्रयात् । उपन्यस्यन्तमाकर्ण्यास्थितोद्यतगीर्बलः ॥ ५९ ॥

---

1 N बहून् तथा । 2 N व्यावृत्याथ । 3 N पत्रं । 4 N लिखितश्लोक° । 5 N °कवित्वविरकृता । 6 A N, °कूर्पर° ।
7 N मर्म । 8 A ज्ञास्यति ।

श्रीवीरे विरते जल्पादर्थतस्तस्य कुर्वतः। अनुवादं जगादासौ जल्पं सर्वानुवादतः॥ ६०॥
न शक्तोऽहमिति प्राह **वादिसिंह**स्ततो नृपः। स्वयं बाहौ विधृत्याशु पातयामास भूतले॥ ६१॥
वक्तुं न शक्तश्चेदुच्चैरासने कथमासिवान्। तथा च कविराजः श्रीश्री**पालो** वाक्यमब्रवीत्॥ ६२॥

**गुणैरुत्तुङ्गतां याति नोच्चैरासनसंस्थितः।**
**प्रासादशिखरस्थोऽपि काकः किं गरुडायते॥ ६३॥** 5

ततो विडम्ब्यमानं तं दृष्ट्वा श्रीवीर ऊचिवान्। श्रूयतां[1] भूप मे वाणी प्राणी दर्पेण जीयते॥ ६४॥
यदनेन नराधीश! शुद्धन्यायैकनिष्ठधीः। सभाध्यक्षमवज्ञातो[2] वर्णाश्रमगुरुर्भवान्॥ ६५॥
स्वास्याम्बुजस्थिरावासप्रदानात् प्रीणिता दृढम्। त्वद्रुष्टा कोपभूरत्र दैन्यदाद् वाचि मन्दताम्॥६६॥–युग्मम्।
वाचां रणे तु चास्माकं प्राग्रूढः समयो ह्ययम्। वादी निगृह्यमाणो हि संरक्ष्यः प्रतिवादिना॥ ६७॥
ततो विमुच्यतां श्रीमन्! मदान्धोऽयं कृपास्पदम्। निशम्येति नृपेणासौ मुक्तो[3] दृष्ट्वा ततो बहिः॥ ६८॥ 10
जयपत्रार्पणादस्माददे तेजः परं तदा। द्रव्यं तु निःस्पृहत्वेन स्पृशत्यपि पुनर्न सः॥ ६९॥

§ ३. अन्यदा जययात्रायां चलिते[4] गूर्जरेशितुः[5]। चतुरङ्गचमूचक्रे रेणुच्छादितभानुनि॥ ७०॥
श्रीवीराचार्यचैत्यस्य पुरतः सञ्चरिष्णुनि। नृपमीक्षितुमाप्ते च कवीन्द्रे तत्र विश्रुते॥ ७१॥
क्रमात् तत्र च संप्राप्तः श्रीसिद्धाधीशभूपतिः। तं समीक्ष्य कविः कश्चित् समस्यापदमभ्यधात्॥७२॥
तदुद्दिश्य कवौ वीराचार्ये दृष्टिं व्यधान्नृपः। अनायासात् ततोऽपूरि कृतिना तेन सत्वरम्॥ ७३॥ 15

तथा हि–

**कालिन्दि ब्रूहि कुम्भोद्भवजलधिरहं नाम गृह्णासि कस्मा-**
**च्छत्रोर्मे नर्मदाऽहं त्वमपि मम सपत्न्याश्च गृह्णासि नाम।**
**मालिन्यं तर्हि कस्मादविरलविगलत्कज्जलैर्मालवीनां**
**बाष्पाम्भोभिः किमासां समजनि चलितो गूर्जराणामधीशः॥ ७४॥** 20

श्रुत्वेति भूप आचख्यौ तव सिद्धगिराऽनया। मालवेशं ग्रहीष्यामि संशयो नात्र मे हृदि॥ ७५॥
त्वया वलानकस्थेनाशिष्टो मे शत्रुनिग्रहः। विजयस्य पताकेयं ततस्तत्रास्तु सा दृढम्॥ ७६॥
श्रीभावाचार्यचैत्यस्य पताकाऽभूद् वलानके। महता विहितं यस्माच्चिरेणापि न नश्यति॥ ७७॥

§ ४. वादी कमलकीर्त्याख्य आशाम्बरयतीश्वरः। वादमुद्राभृदभ्यागादवज्ञातान्यकोविदः॥ ७८॥
आस्थानं सिद्धराजस्य जिह्वाकण्डूययार्दितः। वीराचार्यं स आह्वास्त मद्यास्तं विदुषां रणे॥ ७९॥ 25
पञ्चवर्षीयबालं स सहादाय समागमत्। अवज्ञया वादिनं तं वीक्ष्य न्यविशदासने॥ ८०॥
स चोपन्यस्तवान् सर्वसामर्थ्येन गुरुस्ततः। श्रीवीरो बालया सार्द्धमरंस्त कुतुकादिव॥ ८१॥
स तं दृष्ट्वाऽब्रवीद् वादी भूपते! भवतः सभा। नोचिता विदुषां बालक्रीडाविप्लवसम्भृता॥ ८२॥
"राजाऽऽह स्वप्रमाणेन क्रीडत्वेष सुधेश्वरः।[6] इत्युक्त्वा प्रेक्षितो[7] वीरो नृपेण प्राह[8] सस्मितः॥ ८३॥
समानवयसोर्वादो विधूद्वयेति मया ततः। एषा बाला समानिन्ये बलाद्वृति[9]निरादरा॥ ८४॥ 30
एष वाद्यपि नग्नत्वाद् दृश्यते डिम्भसन्निभः। उभयोरेतयोरस्तु वादो क्रीडात्वनेन नः[10]"॥ ८५॥
स्त्रीनिर्वाणनिषेधेनानयैवास्य च विग्रहः। विधेयस्तदसौ वादमुद्रयाम्मुं विजेष्यते॥ ८६॥

---

1 N भूयते। 2 N सभामध्यमवज्ञातो। 3 B मुक्त कृष्ट्वा। 4 N चलितो। 5 N गूर्जरे शिशु। 6 N राजा हस्वप्रमाणेन।
7 N प्रेक्षितो। 8 D सह। 9 N B बलाद्वत॰। 10 N तु।

अस्पृष्टहस्तं तन्मौलौ प्रदायोचे यतीश्वरः । तां जल्प वादिनानेन स्थापय स्त्रीषु निर्वृतिम् ॥ ८७ ॥
ततः सा निपुणाधीतप्रमाणविदुषामिव । वाग्भरैः [1]स्थापयामास तेनाशक्यस्थिरोत्तरैः ॥ ८८ ॥
अनेडमूकतां प्राप्ते तत्र विन्नस्तमानसे । सल्लुर्जयजयारावाः सभ्यानां नृपतेरपि ॥ ८९ ॥
भूपालः प्राह को जेता मत्सभां तपति प्रभौ । श्रीवीरे वादिवीरेऽत्र सिद्धेऽनेकासु सिद्धिषु ॥ ९० ॥
5　यदीयहस्तस्पर्शेन सङ्क्रान्ता यत्र तत्र च । वाग्देवी भाषतेऽजस्रं स शक्यः केन वर्णितुम् ॥ ९१ ॥
एवं युगप्रधानाभगुणव्यूताः पटा इव । श्रीवीरसूरयः पान्तु भव्यजाड्यापहारिणः ॥ ९२ ॥
श्रीमत्कालकसूरीणामनिर्वाच्यं प्रभाद्भुतम् । अद्यापि यत्कुले वीराः प्राग्वीरान् भासयन्त्यमी ॥ ९३ ॥

श्रीचन्द्रप्रभसूरिपट्टसरसीहंसप्रभः श्रीप्रभा-
चन्द्रः सूरिरनेन चेतसि कृते श्रीरामलक्ष्मीभुवा ।
10　श्रीपूर्वर्षिचरित्ररोहणगिरौ श्रीवीरवृत्ताद्भुतं
श्रीप्रद्युम्नमुनीन्दुना विशदितः शृङ्गः सविंशोऽभवत् ॥ ९४ ॥

॥ ग्रं० ९६ अ० ११; उभयं ४५५२ अ० ११ ॥

॥ इति श्रीवीरसूरिप्रबन्धः ॥

---

1 D वाग्भिरस्थापयत्तेनाशक्यमर्मभिरुत्तरः ।

# २१. श्रीवादिदेवसूरिचरितम् ।

श्रीदेवसूरिर्वः पातु य आक्रम्य दिगम्बरम् । कीर्तेरपि स्त्रियः सिद्धमूलधिष्ण्य[1]मतिष्ठिपत् ॥ १ ॥
देवाचार्यः श्रिये[2] भूयात् केवलज्ञानशालिनाम् । विमोक्ष्याभोजनं येनाप्युच्छित्तिः शासने कृता ॥ २ ॥
जीवितानादिराजीवममध्यमहितोदयम् । अनन्तविधुरद्रोहं वदनं तस्य सस्तुमः ॥ ३ ॥
भ्रान्तिसंवर्तकभ्रान्तिदुर्वृत्तरजसः शमे । अवारवारिवाहश्रि तद्वृत्तं परिकीर्त्यते ॥ ४ ॥ 5

§१. अस्ति गूर्जरदेशस्य नवनीतमिवोद्धृतम् । अष्टादशशतीनाम मण्डलं स्वर्गखण्डलम् ॥ ५ ॥
तत्र मड्डाहृतं नाम नगरं नगराजिभिः । ध्वान्तस्येव महादुर्गमगम्यं सूर्यरोचिषाम् ॥ ६ ॥
सद्वृत्तोज्जीवनच्छायो राजमानः स्वतेजसा । प्राग्वाटवंशमुक्तासीद् वीरनागाभिधो गृही ॥ ७ ॥
तत्प्रिया सत्क्रियाधारा प्रियंकरगुणावनिः । जिनदेवीति देवीव मेना हिमवतो बभौ ॥ ८ ॥
अन्यदा सा निशि स्वप्ने पीयूषरुचिमैक्षत । प्रविशन्तं मुखे पृथ्व्यामवतारेच्छया किल ॥ ९ ॥ 10
अन्वये गुरवस्तस्य श्रीमुनिचन्द्रसूरयः । सन्ति शान्तिकमन्त्रान्ते येषां नामाक्षराण्यपि ॥ १० ॥
प्रातः सा तत्पुरे[3] गत्वा नत्वा सत्त्वमहालया । अपृच्छन्मुदिताचार्यं(०र्थं ?) स्वप्नस्यातिशयस्पृशः ॥ ११ ॥
देवश्चन्द्रनिभः कोऽप्यवततार तवोदरे । आनन्दयिष्यते विश्वं येन ते चेत्थमादिशन् ॥ १२ ॥
अथ सा समयेऽसूत सुतं वज्रोपमद्युतिम् । यत्तेजसा कलिः शैलश्चकम्पे भेदभीतितः ॥ १३ ॥
हृदयानन्दने तत्र वर्धमाने च नन्दने । चन्द्रस्वप्नात् पूर्णचन्द्र इत्याख्यां तत्पिता व्यधात् ॥ १४ ॥ 15
कदाचिन्नगरे तत्राशिवं जज्ञे जनान्तकृत् । सहसैव यतो लोकः प्रेक्ष्याप्रेक्ष्यत्वमादधौ ॥ १५ ॥
वीरनागो विचिन्त्यैतद् दक्षिणां दिशमाश्रयत् । भृगुकच्छपुरं प्राप लाटदेशविभूषणम् ॥ १६ ॥
विहारं जंगमं तीर्थं श्रीमुनिचन्द्रसूरयः । चक्रुस्तत्र तदादेशात् स्थापितोऽसौ सधर्मिभिः ॥ १७ ॥
वर्षाष्टकवयाः पूर्णचन्द्र इत्यस्य नन्दनः । चक्रे [4]सुखासिकादीनां वाणिज्यं शैशवोचितम् ॥ १८ ॥
वित्त[5]नौवित्तहर्म्येषु विकाशिचणकैः समाः । द्राक्षा अवापदर्भेत्त्वेऽपि हि पुण्यानि जाग्रति ॥ १९ ॥ 20
कस्मिंश्चित्सदनेऽन्येद्युर्गतो व्यञ्जनविक्रये । द्रम्मान् हेम च गेहेशं पिठैरुज्झन्तमैक्षत ॥ २० ॥
[6]भयाभाग्याद् घटच्छ्लक्ष्णशर्कराङ्गाररूपतः । पश्यति स्म ततः पूर्णचन्द्रः प्राहातिविस्मितः ॥ २१ ॥
किमुज्झसि महाद्रव्यं नरसञ्जीवनौषधम् । इत्युक्ते स गृही दध्यौ चित्तेऽहो पुण्यवानसौ ॥ २२ ॥
वत्स ! द्रव्यमिदं वंशपात्रे क्षिप्त्वा ममार्पय । इत्युक्तः[7] पूरयित्वाऽसौ पात्राण्यस्यार्पयत् तदा ॥ २३ ॥
तत्करस्पर्शमाहात्म्यात् तद् द्रव्यं पश्यति स्म सः । अपुण्य-पुण्ययोः साक्षादीदृशं दृश्यतेऽन्तरम् ॥ २४ ॥ 25
सोऽन्तर्गेहं क्षिपत्येवं सर्वं निहितमन्तरा । एका सुखादिकाहेतोः प्रसृतिस्तेन चार्प्यत[8] ॥ २५ ॥
हृष्टश्च पितुराख्याय[9] ददौ तद् द्रविणं मुदा । वीरनागः प्रभूणां च यथावृत्तमदोऽवदत् ॥ २६ ॥
व्यमृशंस्तेऽप्यथातार्पीत्[10] किमेष पुरुषोत्तमः । दर्शयन्ती स्वरूपाणि लक्ष्मीर्यस्याभिलाषुका ॥ २७ ॥
रक्षत्कुमुदचन्द्रांशुप्रसराच्छादकोदयः । विरोचनो विनेयश्चेद्पालन्तोन्नतिस्तदा ॥ २८ ॥
ततस्तेऽप्यवदन् वाचं शृणु नस्तव यद्वरम् । वस्तु सम्पद्यते यस्य भक्त्या तत् प्रतिपद्यते ॥ २९ ॥ 30
स प्राह नाथ ! पूज्यानां कुले नो गुरुताभृताम् । अहं त्वेकसुतो जीर्णस्तदास्या मेऽत्र जीवितुम् ॥ ३० ॥

---

1 N मूलधिया॰ । 2 N श्रियो । 3 N तत्पुरे । 4 B सुखादिका॰ । 5 D वित्त, N वित्तनौवित्तह॰ । 6 N D तया॰ ।
7 N इत्युक्त्वा । 8 N चार्पिता । 9 D पितुराख्याय । 10 A ऽप्याथाता॰ ।

व्यवसाये क्षमः कीदृक्षेऽपि नाहं जनन्यपि । अस्य नरपत्तनुरेषाऽनन्यसूस्तद् वदामि किम् ॥ ३१ ॥
अत्र चेत् पूज्यपादानामाग्रहस्तन्मया नहि । विचारणं हि कर्तव्यं गृह्यतामेष नन्दनः ॥ ३२ ॥–विशेषकम् ।
प्रभुराहाथ मे पञ्चशती चारित्रिणां गणे । सर्वेऽपि ते सुताः सन्तु तवैकस्मादतः प्रति ॥ ३३ ॥
अमी साधर्मिका यावज्जीवं कश्चिपुदास्तव । धर्मं धेह्यास्व निश्चिन्तः परलोकैकशम्बलम् ॥ ३४ ॥
5 तदम्बां च यथादेशकारिणीमनुमान्य च । पूर्णचन्द्रं दृढाभक्तिं प्रभवः समदीक्षयन् ॥ ३५ ॥

§२. रामचन्द्राभिधां तस्य[1] ददुरानन्दनाकृतेः[2] । दर्शनोल्लासिनः सद्यसिन्धुवृद्धिविधायिनः ॥ ३६ ॥
दुर्जेय[3]त्वकलंकस्यापनोदादुपकारिणीम् । यत्प्रज्ञा[4] दुर्गशास्त्राणामपि वाग्गोचरः स किम् ॥ ३७ ॥
तर्क-लक्षण-साहित्यविद्यापारगतः स च । अभूत् स्वपरसिद्धान्ते वर्तमाने कषोपलः ॥ ३८ ॥
शिवाद्वैतं वदन् बन्धः[5] पुरे धवलके द्विजः । काश्मीरः सागरो जिग्ये वादात् सत्यपुरे पुरे ॥३९॥
10 तथा नागपुरे क्षुण्णो गुणचन्द्रो दिगंबरः । चित्रकूटे भागवतः शिवभूत्याख्यया पुनः ॥ ४० ॥
गंगाधरो गोपगिरौ धारायां धरणीधरः । पद्माकरो द्विजः पुष्करिण्यां वादमदोद्धुरः ॥४१॥
जितश्च श्रीभृगुक्षेत्रे कृष्णाख्यो ब्राह्मणाग्रणीः । एवं वादजयोन्मुद्रो रामचन्द्रः शिवावभूत् ॥ ४२ ॥
विद्वान् विमलचन्द्रोऽथ हरिचन्द्रः प्रभानिधिः । सोमचन्द्रः पार्श्वचन्द्रो विबुधः कुलभूषणः ॥
प्राज्ञः शान्तिस्तथाऽशोकचन्द्रश्चन्द्रोल्लसद्यशाः । अजायन्त सतीर्थ्योऽस्य मेरोरिव कुलाचलाः ॥ ४४ ॥
15 ततो योग्यं परिज्ञाय रामचन्द्रं मनीषिणम् । प्रत्यष्ठिपन् पदे दत्तदेवसूरिवराभिधम् ॥ ४५ ॥
पितुस्तस्य प्रवं वीरनागाख्यस्य स्वसुः पुनः । गुरात्तप्रतमुद्राया अमुद्राया महाव्रतैः ॥ ४६ ॥
महत्तराप्रतिष्ठां च व्यधुर्विधुरितांहसः । श्रीमच्चन्दनबालेति नामास्याः प्रददुर्मुदा ॥ ४७ ॥–युग्मम् ।

§३. अन्यदा गुर्वनुज्ञाताः श्रीमन्तो देवसूरयः । विहारमादधुः पूज्याः पुरे धवलकाभिधे ॥ ४८ ॥
उदयो नाम तत्रास्ति विदितो धार्मिकाग्रणीः । श्रीमत्सीमंधरस्वामिबिम्बं सैष व्यधापयत् ॥ ४९ ॥
20 स प्रतिष्ठाविधौ तस्यानिश्चिन्वन् सद्गुरुं ततः । श्रीमच्छासनदेवी चाराध्नोत् त्र्यहमुपोषितः ॥ ५० ॥
युगप्रधानकल्पेन श्रीमता देवसूरिणा । प्रतिष्ठापय बिम्बं स्वमित्युपादिशत्तस्य सा ॥ ५१ ॥
तत्तदर्थनया बिम्बप्रतिष्ठां विदधुस्तदा । ऊदावसति नाम्ना तच्चैत्यमद्यापि विद्यते ॥ ५२ ॥

§४. अथ नागपुरेऽन्येद्युः प्रभवो विजिहीर्षवः । गिरीन्द्रमर्बुदं प्रापुरुत्का आरुरुक्षव तम् ॥ ५३ ॥
मन्त्रिणोऽम्बप्रसादस्य गिरिमारोहतः सह । गुरुभिः कर्मवैचित्र्याद् दन्दशूकोऽदशत् पदे ॥ ५४ ॥
25 ज्ञात्वा ते मेषपर्यंकस्य देवं पादोदकं तदा । धौतमात्रे तदा तेन दंशोऽसौ निर्विषोऽभवत् ॥ ५५ ॥
श्रीनाभेयं नमस्कृत्य संसारार्णवतारणम् । तुष्टुवुः श्रीमदम्बां च प्रत्यक्षां शासनेश्वरीम् ॥ ५६ ॥
साऽवादीत् कथयिष्यामि किंचित्ते प्रभुमानतः । दूरे सपादलक्षे त्वं मा यासीर्मम वाक्यतः ॥ ५७ ॥
गुरवश्चाष्टमासायुरस्मादेव दिनाद् यतः । व्यावर्तस्व ततो वेगादणहिल्लपुरं प्रति ॥ ५८ ॥
इत्याख्याय तिरोधाय देवी दध्यौ ततः प्रभुः । अम्बाम्बाया इवाम्बाया वात्सल्यमहो महत् ॥ ५९ ॥
30 व्याहूलापान् ततः पूर्णपुर आस्थन् गुरौ वचः । आनन्दप्रसमं प्रापुस्ते कालमानतो निशाम् ॥ ६० ॥

§५. अन्यदा देवबोधाख्यः श्रीभागवतदर्शनी । भूरिवादजयोन्मुद्रः श्रीमत्पत्तनमापयौ ॥ ६१ ॥
अपाठ्यत[6] पत्रं च राजद्वारे मदोद्धुरः । यत्र श्लोकं दुरुपठोकं विबुधैरठियत सः ॥ ६२ ॥

---

1 D तस्य । 2 A D °कृते । 3 A दुर्जेयत्व°, N दुर्जेयत्व° । 4 N °प्रज्ञा° । 5 N बंधः । 6 N अपाठयत° ।

एकद्वित्रिचतुःपंचषण्मनकमनं न काः ।
देवबोधे मयि क्रुद्धे षण्मेनकमनेनकाः ॥ ६३ ॥

ततः सर्वेऽपि विद्वांस एनमालोक्य सूर्यवत् । दृशो विपरियन्ति स्म दुर्बोधं सुधियामपि ॥ ६४ ॥
षण्मासान्ते तदा वाग्वाग्प्रसादो भूपतेः पुरः । देवसूरिप्रभुं विज्ञराजं दर्शयति स्म च ॥ ६५ ॥ 5
स भूपालपुरः श्लोकं बिभेदोद्भेदधीनिधिः । कुल्लत्थजलवद्गण्डशैलं राज्ञा मतः सुहृत् ॥ ६६ ॥

अथास्य श्लोकस्य विवरणं–कै गै रै शब्दे । कायन्तीति कचित् डप्रत्यये काः शब्देन वादिनः । ते यक्षाः । सन्तीति क्रियाध्याहारे, यक्षादिनो न सन्ति । क्व सति–देवबोधे मयि क्रुद्धे सति । पुनः कथंभूते–एकद्वित्रि-चतुःपंचषण्मेनकमने । मांक माने, मानं माः क्विप् प्रमाणं । एकं प्रमाणं प्रत्यक्षरूपं येषां ते एकमाः, चार्वाकाः, एकप्रमाणवादिनः । तथा द्विमाः–द्वे प्रमाणे प्रत्यक्षानुमानरूपे येषां ते द्विमाः, द्विप्रमाणवादिनो बौद्धाः वैशे- 10
षिकाश्च । तथा त्रिमाः–त्रीणि प्रमाणानि प्रत्यक्षानुमानागमरूपाणि येषां ते त्रिमाः, त्रिप्रमाणवादिनः सांख्याः । चत्वारि प्रत्यक्षानुमानागमोपमानरूपाणि प्रमाणानि येषां ते चतुर्माः, चतुःप्रमाणवादिनो नैयायिकाः । तथा पंचमाः–पंच प्रत्यक्षानुमानागमोपमानार्थापत्तिरूपाणि प्रमाणानि येषां ते पंचमाः, पंचप्रमाणवादिनः प्राभा-कराः । तथा षण्माः–षट् प्रत्यक्षानुमानागमोपमानार्थापत्त्यभावरूपाणि प्रमाणानि येषां ते षण्माः, षट्प्रमाण-वादिनो मीमांसकाः । तेषामिनास्तद्धेतृत्वात्, तान् कमते अभिलषति, स एकद्वित्रिचतुःपंचषण्मेनकमनः, 15
तस्मिन्मयि । तथा मेनकमनेनका अपि न काः न वादिनः । मा लक्ष्मीः, तस्या इनः स्वामी विष्णुः; कमनो ब्रह्मा; इन आदित्यः; मेनकमनेनाः । अल्पत्वात्कप्रत्यये मेनकमनेनकाः । तेऽपि विष्णु-ब्रह्म-सूर्या मयि देवबोधे क्रुद्धे सति अज्ञातत्वाच्च काः न वादिनः । यतो–देवान् बोधयति–इति शब्दव्युत्पत्त्या तेऽपि मया बोधिताः सुज्ञाना भवन्ति । ततो मानुषाणां षड्वादिनां विदुषामपि किं प्रमाणं का वार्ता ॥ इति पद्यावलंबव्याख्या ॥ ग्रं० १६ ॥

❀

§६. अथास्ति [1]थाहडो नाम धनवान् धार्मिकाग्रणीः । गुरुपादान् प्रणम्याथ चक्रे विज्ञापनामसौ ॥६७॥ 20
आदिश्यतामतिश्लाघ्यं कृत्यं यत्र धनं व्यये । प्रभुराहालये जैने द्रव्यस्य सफलो व्ययः ॥ ६८ ॥
आदेशानन्तरं तेनाकार्यत श्रीजिनालयः । हेमाद्रिवदलक्तुङ्गो दीप्यत्कुम्भमहामणिः ॥ ६९ ॥
श्रीमतो वर्द्धमानस्वामीभर्तुर् बिम्बमद्भुतम् । यत्तेजसा जिताश्चन्द्रसूर्यकान्तमणिप्रभाः ॥ ७० ॥
शतैकादशके साष्टाससप्ततौ विक्रमार्कतः । वत्सराणां व्यतिक्रान्ते श्रीमुनिचन्द्रसूरयः ॥ ७१ ॥
आराधनाविधिश्रेष्ठं कृत्वा प्रायोपवेशनम् । शमपीयूषकल्लोलप्लुतास्ते[2] त्रिदिवं ययुः[3] ॥ ७२ ॥–युग्मम् । 25
वत्सरे तत्र चैकत्र पूर्णे श्रीदेवसूरिभिः । श्रीवीरस्य प्रतिष्ठां स थाहडोऽकारयन्मुदा ॥ ७३ ॥

§७. अथ नागपुरे श्रीमान् देवसूरिप्रभुर्ययौ । अभ्यागादत्र च श्रीमानाह्लादननरेश्वरः ॥ ७४ ॥
प्रणनाम सदाचारः[4] स च भागवतेश्वरः । देवबोध इमामार्यामार्यांपारोऽपठत् प्रभुम्[5] ॥ ७५ ॥

सा चेयं–

यो वादिनो द्विजिह्वान् साटोपं विषममानमुद्गिरतः । 30
शमयति स देवसूरिर्नरेन्द्रवन्द्यः कथं न स्यात् ॥ ७६ ॥

एवं वाचो महाभक्त्या स्वामिनो नगरान्तरा । राज्ञा विज्ञप्तस्तत्रार्यो भव्यान् बोधयति स्म सः ॥ ७७ ॥
तत्र श्रीसिद्धराजोऽथ नगरं रुरुधेतराम् । प्रत्यसं देवसूरिं च ज्ञात्वा व्यावृत्ते ततः ॥ ७८ ॥
प्रभ्वस्थितेऽत्र यस्मिन्ने दुर्गे लातुं न शक्यते । इति व्यावृत्याऽऽह्वयद् भक्त्या नृपः श्रीपत्तने प्रभुम् ॥७९॥

1 N वाहडो । 2 N °कल्लोले । 3 N ययौ । 4 N [illegible]; B [illegible]; D [illegible] । 5 B [illegible]; D [illegible] ।

तत्र वर्षास्ववस्थाप्याश्विने[1] तं चाभ्यमित्रयत् । प्राकारं जगृहे श्रीमान् सिद्धराजश्च सत्वरम् ॥ ८० ॥

§८. अथ कर्णावतीसङ्घोऽन्येद्युरुत्कण्ठितः प्रभोः । आह्वाययन्महाभक्त्या चतुर्मासकहेतवे ॥ ८१ ॥
ततस्तत्राययुः पूज्याः सङ्घादेशपुरस्कृताः । [2]शुद्धोपाश्रयमासाद्यावस्थानं प्रतिशुश्रुवुः ॥ ८२ ॥
अरिष्टनेमिप्रासादे व्याख्यानं च प्रतुष्टुवुः । अबुध्यन्ताबुधा लोका यस्य श्रवणतो घनाः ॥ ८३ ॥
5 इतश्च दाक्षिणात्यः श्रीकर्णाटनृपतेर्गुरुः । श्रीजयकेशिदेवस्य श्रीसिद्धेशप्रसूपितुः ॥ ८४ ॥
अनेकवादिनिर्जिष्णुर्वादिपुत्रकपद्धतिम् । वामपादे वहन् गर्वपर्वताधित्यकाश्रितः ॥ ८५ ॥
जैनो जैनमतद्वेषिदर्पसर्पकरण्डिका । श्रीमान् कुमुदचन्द्राख्यो वादिचक्री दिगम्बरः ॥ ८६ ॥
श्रीवासुपूज्यचैत्यस्थो वर्षानिर्वाहहेतवे । श्रीदेवसूरिधर्माख्याप्रभावामर्षणस्तदा ॥ ८७ ॥
दानान्मुखरयन् वंदिवृन्दानि प्रणिधाय सः । उद्दीपयन् वचोभिस्तं सूरिं शमिकुलेश्वरम् ॥ ८८ ॥
10 —पंचभिः कुलकम् ।

वैतालिकपतिर्धर्म्मपर्षदन्तःप्रविश्य च । आह स्तुतिपरस्तस्य काव्यानि क्रोधदीप्तये ॥ ८९ ॥

गेय-वाङ्मययोः पारदृश्वरीं प्रेक्ष्य यन्मतिम् ।
वीणापुस्तकभृद् ब्राह्मी विस्मिता [3]सदपारगा ॥ ९० ॥

ततस्तद्ब्रह्ममास्थाय तदुपास्तिवरास्तिकाः । सिताम्बराः परानन्दभाजो भवत किं न हि ॥ ९१ ॥

15 तथा हि—

**हंहो श्वेतपटाः किमेष विकटाटोपोक्तिसण्टङ्कितैः**
**संसारावटकोटरेऽतिविषमे मुग्धो जनः पात्यते ।**
**तत्त्वातत्त्वविचारणासु यदि वो हेवाकलेशस्तदा**
**सत्यं कौमुदचन्द्रमंह्रियुगलं रात्रिंदिवं ध्यायत ॥ ९२ ॥**

20 अथाह देवसूरीणां माणिक्याख्यो विनेयराट् । दर्शनप्रतिकूलाभिर्वाग्मी रोषाङ्कुरं वहन् ॥ ९३ ॥

तद्यथा—

**कः कण्ठीरवकण्ठकेसरसटाभारं स्पृशत्यंह्रिणा**
**कः कुन्तेन शितेन नेत्रकुहरे कण्डूयनं कांक्षति ।**
**कः सन्नह्यति पन्नगेश्वरशिरोरत्नावतंसश्रिये**
25 **यः श्वेताम्बरदर्शनस्य कुरुते वन्द्यस्य निन्दामिमाम् ॥ ९४ ॥**

माणिक्यः शिष्यमाणिक्यं जगदे देवसूरिभिः । नात्र कोपावकाशोऽस्ति खरवादिनि दुर्जने ॥ ९५ ॥

अथ बन्दिराज आह श्वेताम्बरचणकतुरग इह वादी ।
श्वेताम्बरतमसोऽर्कः श्वेताम्बरमशकधूमोऽयम् ॥ ९६ ॥
श्वेताम्बरप्रहसने[4] स सूत्रधारः प्रभुः कुमुदचन्द्रः ।
30 किं वाच्यस्तव वाचा सदिश किमिहान्यवाग्डमरैः[5] ॥ ९७ ॥

स गुरुः प्राह नार्हंयुर्नैतमास्माकदर्शने । ततः क्वथय मद्भ्रातुः [6]पुर एक हि वाचिकम् ॥ ९८ ॥

तद् यथा—

**दिगम्बरशिरोमणे ! गुणपराङ्मुखो मा स्म भू-**
**र्गुणग्रहफलं हि तद् वसति यद् रमापङ्कजे ।**

---

1 N °स्थाप्याश्विते । 2 शिरो° । 3 N वेदपारग । 4 N श्वेतांबर प्रहसनैः । 5 N वाग्डंबरैः । 6 D पर ।

ततस्त्यज मदं कुरु प्रशमसंयतान् स्वान् गुणान्
दमो हि मुनिभूषणं स च भवेन्मदव्यत्यये ॥ ९९ ॥

इत्येवं कथिते वन्दिवरेणास्य पुरो मुनेः । वादिनः सोऽवदन्मूर्खसाधूनां शम उत्तरम् ॥ १०० ॥
उत्तेजनं किमप्येष क्रियते चित्तपीडनम् । अस्य विद्याकलामध्यं ज्ञायते येन तत्त्वतः ॥ १०१ ॥
विसृज्येति निजैः साधुवृन्दं रथ्यान्तरागतम् । वैरानुबन्धचेष्टाभिरुपासर्जयदद्भुतम् ॥ १०२ ॥
इत्येवमुपसृष्टेऽत्र निःप्रकम्पे सुमेरुवत् । दिग्वासा निजरूपाभमविशिष्टं प्रचक्रमे ॥ १०३ ॥
निजचैत्याग्रतो यान्तीं वृद्धां गोचरचर्यया । उपसर्गयितुं साध्वीमारेभेऽन्येद्युरुद्यतः ॥ १०४ ॥
अथ पल्लवकान् पल्लवकानिव [1]तमस्तरोः । प्रेष्य तां कुण्डके क्षिप्त्वा नर्तयामास साहसी ॥ १०५ ॥
अहो साध्वीमसौ वृद्धां दर्शनिव्याजवुक्कसः । विडम्बयति पापीति तस्यावर्णो जनेऽभवत् ॥ १०६ ॥
अथ सा मोचिता कैश्चिदनुकम्पापरैर्नरैः । सूरेरुपाश्रयं प्रायादतिगद्गदशब्दभूः ॥ १०७ ॥
किंकृतस्तेऽपमानोऽयमिति पृष्टा च सूरिभिः । जरामन्युभराव्यक्तस्वरं प्राह तदग्रतः ॥ १०८ ॥
वर्द्धितोऽध्यापितः सूरिपदे मद्गुरुभिर्भवान् । स्थापितोऽस्मादृशामीदृग्विडम्बनकृते ध्रुवम् ॥ १०९ ॥
दिगम्बरोऽयं बीभत्सदर्शनः स्वविटव्रजैः । राजाध्वनि प्रयान्तीं मामनाथवदुपाद्रवत् ॥ ११० ॥
विद्वत्तया प्रभुत्वेन किं फलं तेऽवकेशिना । किं करस्थेन शस्त्रेण यदि शत्रुर्न हन्यते ॥ १११ ॥
शमशैत्यमहावल्ल्याः फलं परिभवो दृढः । ग्रस्यते मुच्यते वापि राहुणा स्वेच्छया शशी ॥ ११२ ॥
अद्य ते विक्रमः[2] कालः पठितस्य फलं ह्रदः । धान्ये शुष्के घने चास्ते वर्षन् मेघः करोतु किम् ॥ ११३ ॥
देवसूरिरथो वाचमुवाच क्रोधदुर्द्धराम् । मा विषादं कुरुष्वार्ये ! दुर्विनीतः पतिष्यति ॥ ११४ ॥
आर्याह दुर्विनीतोऽयं पतिष्यति नवा पुनः । त्वयि न्यस्तभरः सङ्घः पतिष्यत्येव वेत्रवत् ॥ ११५ ॥
प्रभुराह स्थिरीभूय चेद् विलोकयसे ततः । मुक्तानामिह वेधो नः संभवी गुणयुक्तये[3] ॥ ११६ ॥
अथ चोवाच माणिक्य ! विज्ञप्तिं लिख मामिकाम् । श्रीमत्पत्तनसङ्घाय विनयातिशयस्पृशम् ॥ ११७ ॥
आदेशानन्तरं सोऽथ लिखति स स्फुटाक्षरम् । अदर्शयत् प्रभोः पश्चादथासौ प्रत्यवाचयत् ॥ ११८ ॥

'स्वस्ति नत्वा जिनं श्रीमदणहिल्लपुरे प्रभुम् ।
संघं कर्णावतीपुर्याः श्रीमंतो देवसूरयः ॥ ११९ ॥
भक्त्या विज्ञपयन्त्यत्राशाम्बरेण विवादिना ।
शीघ्रमेवागमिष्यामः कृतवादाश्रवा इति ॥ १२० ॥'

अचिराध्वन्यपुंसश्च हस्ते साऽथ समर्पिता । गूर्जराणां राजधानीं स प्राप प्रहरत्रयात् ॥ १२१ ॥
दृष्ट्वा सङ्घेन मर्त्योऽसौ भोजनाच्छादनादिभिः । सम्मान्य प्रहितः शीघ्रं प्रतिलेखं समर्प्य च ॥ १२२ ॥
आयाद् देवगुरोः पार्श्वे सङ्घादेशं ददौ मुदा । एनं ललाटे विन्यस्य विमृश्यावाचयच्च सः ॥ १२३ ॥

'स्वस्ति श्रीतीर्थनेतारं नत्वा श्रीपत्तनात् प्रभुः ।
सङ्घः कर्णावतीपुर्यां परवादिजयोर्जितम् ॥ १२४ ॥
श्रीदेवोपपदं सूरिं समादिशति सम्मदात् ।
आगन्तव्यं झटित्येव भवता वादिपुङ्गव ! ॥ १२५ ॥

1 N तमस्तरोः । 2 N विक्रमे । 3 A B N °युक्तयोः ।

§९. इतश्च श्रीदेवसूरेः पुरं प्रविशतः सतः । **थाहडो नागदेव**श्चाययांते संमुखौ तदा ॥ १५४ ॥
ताभ्यां प्रणम्य विज्ञप्तं दिगम्बरपराजये । दाप्यतां स्वेच्छया द्रव्यमेतदर्थं तदर्जितम् ॥ १५५ ॥
श्रीदेवसूरयः प्राहुर्यदि ब्राह्मीप्रसादतः । न जयस्तत् किमुत्कोचैः संकोचैः सत्सविदाम् ॥ १५६ ॥
अथाह **थाहडो** नाथाशम्बरेण धनव्ययात् । तत्रस्थेन धनाध्यक्षाद्वशिता[1] **गांगिला**दयः ॥ १५७ ॥
ऊचुश्च प्रभवो देवा गुरवश्चात्र जाग्रति । कार्यो [2]व्ययो न युष्माभिरस्थाने द्रविणस्य तत् ॥ १५८ ॥ 5
ततः **कुमुदचन्द्रे**णागतेन नगरान्तरा । श्वेताम्बरजयोत्सल्लै कृतं पत्रावलम्बनम् ॥ १५९ ॥
दिनानां विंशतिं प्रत्युपाश्रयं यतिनां तदा । नीरं तृणानि मुक्त्वा च स पुरोगान्यवादयत् ॥ १६० ॥
**केशव**त्रितयं तस्य पक्षे सभ्यतया स्थितम् । अन्येऽप्यर्वाग्दृशः सर्वे तस्य पक्षस्पृशोऽभवन् ॥ १६१ ॥
**थाहड**स्तस्य [3]तत्पत्रं राजद्वारविलम्बितम् । स्फाटयामास शृङ्गारमिव तस्य जयश्रियः ॥ १६२ ॥
श्री**सिद्धाधी**श्वरो राजा **श्रीपाला**दधिगम्य च । वृत्तान्तमाह्वयत् तत्र श्वेताम्बर-दिगम्बरौ ॥ १६३ ॥ 10
सभाव्यवस्थामाधाय प्रैषीद् दूतं च सत्वरम् । सम्बन्धकावताराय तयोर्**गांगिल**मंत्रिणे ॥ १६४ ॥
ततः श्रीकरणे सोऽथ श्रीदेवगुरुराह्वयत् । जातिप्रत्ययतः किंचिद् [4]विद्विष्टमिव चावदत् ॥ १६५ ॥

तथा हि–

दन्तानां मलमण्डलीपरिचयात् स्थूलं भविष्णुस्तति[5]
कृत्वा भैक्षकपिण्डभक्षणविधिं शौचं किलाचाम्लतः[6] । 15
नीरं साक्षि शरीरशुद्धिविषये येषामहो कौतुकं
तेऽपि श्वेतपटाः क्षितीश्वरपुरः[7] कांक्षन्ति जल्पोत्सवम् ॥ १६६ ॥

आह **देवगुरुः** स्फूर्त्या मीमांसासक्तताजुषः । धीवराश्चोचितं तद् वः शौचाचारविचारणम् ॥ १६७ ॥

यदुक्तं च–

विमृश विमृशाम्भोभिः शक्योऽपसारयितुं न यै- 20
र्जठरपिठरीक्रोडस्थेमाण्यहो मललेशकः ।
कथमिव सदा तिष्ठन्नात्मन्यरूपिणि तैरहो
परिदलयितुं पार्योऽनार्यैः स पातककर्दमः ॥ १६८ ॥

**माणिक्यः** प्राह किंनाम द्विजस्यास्यास्ति दूषणम् । श्री**सिद्धे**श उपालभ्यः स विवेकबृहस्पतिः ॥१६९॥
संस्कारसूत्रपातेन चतुर्द्धा हृदयात्मनाम् । वपुर्मनोवचःकार्यजातेष्वन्यान्यरूपतः ॥ १७० ॥ 25
अकृत्य-कृत्ययोस्तुल्यकर्तव्यत्वस्पृशां सदा । द्विजन्मनां प्रधानत्वं दर्शनानां विडम्बनम् ॥ १७१ ॥
इत्येवमूहापोहेन सम्बन्धो नार्पितस्तदा । प्रातः सभागतः[8] पृष्टो राजा सचिव**गांगिलः** ॥ १७२ ॥
लिखितो भवता कः सम्बन्धः किं वादिनोर्द्वयोः । स प्राहैषामपावित्र्यान्नार्हा राजसभास्थितिः ॥ १७३ ॥
अतो मया न चालेखि सम्बन्धो नृपतिस्ततः । अन्तःकोपानलं चक्रे पयोधिरिव वाडवम् ॥ १७४ ॥
एवं च सदसन्मर्मविशेषविदुषस्तव । व्ययस्य कारणं तेऽलंकारारोपस्तवोचितः ॥ १७५ ॥ 30
प्रज्ञानां[9] गौरवर्णोऽपि काल एवावभासते । अल्पोऽप्यत्र न ते दोषः सा ममैवाविचारिता ॥ १७६ ॥
परं दर्शनबाह्यत्वाद् माम्यवमागरोऽपि सन् । नान्तर्मुखो गुणान् दोषीकृत्य यस्मात् प्रजल्पसि ॥ १७७ ॥

---

1 A ध्यक्षोद्वसिता; B ध्यक्षावसिता । 2 N यर्योऽन्वयो । 3 N तमस्यं । 4 N विद्विष्ट° । 5 N °ष्णुस्तुते । 6 N किल्व-म्लमनः । 7 N क्षिमीश्वरपुरः । 8 N समागतः । 9 N प्र(अ)ज्ञानां ।

# ग्रन्थकारकृता स्वकीया प्रशस्तिः ।

भास्वत्पात्रं कविमुनिबुधभ्राजितो राजसेव्यः
सर्वेष्टार्थप्रदगुरुलसत्कल्पवृक्षावदातः[1] ।
श्रीजैनांह्रिश्रयशुचि[2]शिराः सिद्धिमद्भद्रशालो
गच्छश्चान्द्रः सुरगिरितुलामश्नुवानः समस्ति[3] ॥ १ ॥

प्रद्युम्नसूरिरिति तत्र पुरा बभूव मन्दारपादपतुलः[4] कलितोरुशाखः ।
यत्सङ्गमामृतरसैर्बहवः सुधर्माधीशा भवन्ति सुधियः सुमनोभिरामाः ॥ २ ॥ 5

अल्लसभायां विजिते दिगम्बरे तदीयपक्षः किल कोशरक्षकः ।
दातुं प्रभोरेकपदं समानयत् तमेकपट्टं जगृहे सुधीषु यः ॥ ३ ॥

शिष्योऽस्याभयदेवसूरिरभवज्जाड्यान्धकारं हरन्
गोभिर्भास्करवत् परां विरचयन् भव्याम्बवर्गे मुदम्[5] । 10
ग्रन्थो वादमहार्णवोऽस्य विदितः प्रौढप्रमेयोर्मिभृत्
दत्तेऽर्थं जिनशासनप्रवहणे[6] सांयात्रिकाणां ध्रुवम् ॥ ४ ॥

1 N °वृक्षा(क्ष)लदाव(ता) । 2 N °जैनाद्रिश्रियशुचि । 3 N °मश्नुवान (नो)सम(मो)स्तिः । 4 N °पादपतुला° । 5 N °वर्गोच्छ्रदम् । 6 N प्रवहणे ।

त्रिभुवनगिरिस्वामी श्रीमान् स कर्दमभूपति-
स्तदुप समभूत् शिष्यः श्रीमद्धनेश्वरसञ्ज्ञया ।
अजनि सुगुरुस्तत्पट्टेऽस्मात् प्रभूत्यवनिस्तुतः
तदनु विदितो विश्वे गच्छः स 'राज'पदोत्तरः ॥ ५ ॥

5 सुगुरुरजितसिंहस्तत्पदाम्भोजभानुः समजनि जनितश्रीर्भव्यपङ्केरुहाणाम् ।
वचनकरवितानं यस्य देदीप्यमानं जडगतमपि सोढुं दुर्दृशोर्न क्षमन्ते ॥ ६ ॥

श्रीवर्द्धमानसुगुरुः कर्कोद्यतधामसद्गतस्तदनु ।
मतसङ्गचारिशरणः समजनि 'जनलग्नदोषहरः ॥ ७ ॥

तत्पट्टभूमिकल्पोपतपाल्यश्रीः श्रीशीलभद्र इति सूरिपदं प्रपेदे ।
10 धर्म्मोपदेशजलवाग्जलैर्यदीयः प्रापोन्नतिं 'जगति कीर्त्तिलतावितानः ॥ ८ ॥

तदंह्रिसरसीहंसः सूरिः श्रीचन्द्र इत्यभूत् ।
विवेचकः शुचिः सद्भिस्तद्वाचानुपजीवनात् ॥ ९ ॥

अर्थप्रकाशिका शास्त्रचक्षुषाममृताञ्जनम् ।
घनसाररसादस्य यन्मतिः सुधागरद्गभूत् ॥ १० ॥

15 सूरिः श्रीभरतेश्वरस्तदनु च प्रामाणिकग्रामणी-
र्यन्नामस्मृतितोऽप्यघं हरति च श्रीधर्म्मघोषप्रभुः ।
कल्याणावलिकन्दलालिजलदः श्रीसर्वदेवो गुरु-
श्चत्वारः किल शीलभद्रसुगुरोः शिष्या नरेन्द्रार्चिताः ॥ ११ ॥

श्रीपार्श्वः स जिनेश्वरप्रभुरभूत् सद्बाम्बुधौ चन्द्रमाः
20 सूरिः श्रीजिनदत्त इत्युदितधीस्त्रिद्रविद्याद्युतिः ।
चारित्रामलशीलनन्दनवनं श्रीपद्मदेवप्रभुः
श्रीश्रीचन्द्रमुनीश्वरस्य जयिनः शिष्या अमूयममी ॥ १२ ॥

श्रीसद्गुरोश्चरणराधनचारुरसं श्रीपूर्णभद्रगुरुरभ्युदितः पदेऽस्य ।
यस्तदिशिशिखिनिभृतो भुवि भव्यभार्या वस्तूनि विश्वविषयाणि विलोकयन्ति ॥१३॥

1 A [illegible] । 2 A [illegible] । 3 N [illegible] । 4 N [illegible]; A [illegible] । 5 N [illegible] । 6 N [illegible] । 7 N [illegible] । 8 A [illegible] । 9 A [illegible] । 10 A [illegible] ।

तत्पट्टोदयपर्वतामृतरुचिः प्रीणंश्चकोरव्रजं
श्रीचन्द्रप्रभसूरिरद्भुतमतिर्ज्योत्स्नानिधानं बभौ ।
आश्चर्यं न कलङ्कधाम तमसानुल्लंघ्यमूर्ति भवं
पाथोधिं क्षणुते[1] विनम्रकमलोल्लासी न दोषाकरः ॥ १४ ॥

आचार्यः श्रीप्रभाचन्द्रस्तत्पादाम्भोजषट्पदः । 5
चित्रं यः सुमनःस्थोऽपि सदानवगुरुक्रमः ॥ १५ ॥

श्री हेमचन्द्रसूरीणामनुध्यानप्रवृत्तितः ।
पर्वणः परिशिष्टस्य दृष्टेः[2] सम्पुटवासनः ॥ १६ ॥

श्रीवज्रानुप्रवृत्तप्रकट[3]मुनिपतिप्रष्ठवृत्तानि तत्तद्
ग्रन्थेभ्यः कानिचिच्च श्रुतधरमुखतः कानिचित् सङ्कलय्य । 10
दुष्प्रापत्वादमीषां विशकलिततयैकत्र चित्रावदातं
जिज्ञासैकाग्रहाणामधिगतविषयेऽभ्युचयं स प्रतेने ॥ १७ ॥
—निभिर्विशेषकम् ।

अत्र क्षूणं हि यत्किञ्चित् संप्रदायविभेदतः ।
मयि प्रसादमाधाय तच्छोधयत कोविदाः ॥ १८ ॥ 15

यत. —

आराधितं[4] मया शून्यं यथा तुष्टं स्वतामदात्[5] ।
निजोक्तौ स्थापितं तत् प्राक् कथाकन्थी[6]कृतास्ततः ॥ १९ ॥

रोदोरन्ध्रगसिद्धकिन्नरगणानुल्लंघ्यशृङ्गस्थिति-
स्तुङ्गत्वोदितवृत्तशेवधिरतिप्रौढार्थसंपत्तिकृत् । 20
पूरप्रभया तिरस्कृतपरज्योतिःप्रकाशोदयः
श्रीपूर्वर्षिचरित्ररोहणगिरौ स्यादारवीन्दुद्भवः ॥ २० ॥

---

1 N सपुळे विल्पकमले° । 2 N °शिष्टसाष्टे° । 3 N °वज्रानुप्रभप्रकट° । 4 N आराधितमया° । 5 N स्व(म)तमे(मे)दात् । 6 A कथाकंठीकृता ।

श्रीप्रद्युम्नगुरोर्हिमांशुविशदो बोधः शुचेः सङ्गतो
मिश्रो रक्तरुचा[1] मम प्रतिपदास्फूर्जद्यशःपूरुषः।
ज्ञानश्रीपुरतः पदार्थघटनाबिम्बद्वयोट्टङ्कनात्
जातो ग्रन्थमिषेण साक्षरशुचिर्द्रम्मश्चिरं नन्दतु ॥ २१ ॥

ॐ

5 वेदानल-शिखि-शशधर (१३३४) वर्षे चैत्रस्य धवलसप्तम्याम्।
शुक्रे पुनर्वसुदिने सम्पूर्णं पूर्वऋषिचरितम्[2] ॥ २२ ॥

ॐ

शिक्षाप्रसादवशतः स्वगुरोर्मयैनमायासमत्र दधता यदवापि पुण्यम्।
व्याख्यानसक्तमनसः श्रवणादराश्च श्रेयस्सुसङ्गममनुत्तरमवाप्नुवन्तु ॥ २३ ॥

ॐ

ग्रन्थस्य मानमस्य प्रत्यक्षरगणनया सुनिर्णीतम्।
10 पञ्चसहस्राः सप्त च शतानि चतुरधिकसप्ततियुतानि* ॥ २४ ॥

। प्रशस्ति श्लोक ४०, उभयं ५७७४, शिवमस्तु।

---

1 D मिश्रोरक्तवरुचा, N मिश्रो(चारु)रुचा। 2 A पूर्वर्षिचरितम्। * B चतुरशीति अधिकमिदं। † B आदर्शे नास्तीयं समस्ताऽपि ग्रन्थकारकृता स्वकीया प्रशस्तिः।

# परिशिष्टद्वयम्



१. प्रभावकचरित्रान्तर्गत-समुद्धृतपद्यानामकाराद्यनुक्रणिका ।



२. प्रभावकचरित्रान्तर्गत-विशेषनाम्नामकाराद्यनुक्रमणिका ।

## १. परिशिष्टम् ।

प्रभावकचरित्रान्तर्गतसमुद्धृतपद्यानां

# अकाराद्यनुक्रमणिका ।

